# चम्पूरामायणे

# बालकाण्डम्

१८ – ०९.०४.२०१८

vyoma

॥ वाचं धेनुमुपासीत ॥

Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- मध्यं तनुत्वात् – “विष्णुपद”त्वात् मध्यभागस्य कार्श्याभावेऽपि आकाशत्वम्
- उच्चस्थे ग्रहपञ्चके – रामजननम्
- अथ रामाभिधानेन – रामनाम्ना रघुवंशं, वाल्मीकिवचनानि च भूषयामास हरिः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
# अग्रजस्यानुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥३१॥

- तम्, एनम्, अनु, अजायन्त, त्रयः, त्रेता-अग्नि-तेजसः, अग्रजस्य, अनु-कुर्वन्तः, तैः, तैः, लोक-उत्तरैः, गुणैः
- अजायन्त = जाताः
- के जाताः? त्रयः = त्रिसङ्ख्याकाः कुमाराः
- कीदृशाः त्रयः? त्रेताग्नितेजसः – त्रेता = आहवनीय-गार्हपत्य-दक्षिणाग्नयः, तत्तुल्यवर्चसः

# तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
# अग्रजस्यानुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥३१॥

- कदा अजायन्त? तम् एनम् अनु = पूर्वोपवर्णितस्य श्रीरामस्य पश्चात्
- कथम्भूताः अजायन्त? अनुकुर्वन्तः = अनुवर्तमानाः
- कस्य अनुकुर्वन्तः? अग्रजस्य = ज्येष्ठभ्रातुः श्रीरामस्य
- कैः अनुकुर्वन्तः? तैस्तैः = बहुभिः, लोकोत्तरैः = अत्युत्कृष्टैः, गुणैः = विद्या-विनय-शौर्य-औदार्यादिभिः

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
# अग्रजस्यानुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥३१॥

- अन्वयः – त्रेताग्नितेजसः त्रयः तैस्तैः लोकोत्तरैः गुणैः अग्रजस्य अनुकुर्वन्तः तम् एनम् अनु अजायन्त ।
- तात्पर्य्यम् – सद्गुणबाहुल्येन अग्रजसदृशाः अग्निवत् वर्चस्विनः त्रयः कुमाराः तस्य श्रीरामस्य पश्चात् जाताः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
# अग्रजस्यानुकुर्वन्तस्तैर्लोकोत्तरैर्गुणैः ॥३१॥

- तम् अनु – “अनुर्लक्षणे” (१.४.८४) इति कर्मप्रवचनीयसंज्ञा । “कर्मप्रवचनीययुक्ते द्वितीया” (२.३.८)
- अजायन्त – “जनी प्रादुर्भावे” – लङ्, प्रथम.३
- त्रयः – त्रि-शब्दः, नित्यं बहुवचनान्तः, पुं.१.३
- त्रेताग्नितेजसः – त्रेता चासौ अग्निश्च, त्रेताग्नेः तेजः येषां ते। “अग्नित्रयमिदं त्रेता”, “त्रेता त्वग्नित्रये युगे” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
# अग्रजस्यानुकुर्वन्तस्तैर्लोकोत्तरैर्गुणैः ॥३१॥

- अग्रजस्य अनुकुर्वन्तः – सम्बन्धसामान्ये षष्ठी
- अनुकुर्वन्तः – अनु + "डुकृञ् करणे" + शतृ – तकारान्तः, पुं, १.३
- लोकोत्तरैः – लोकस्य उत्तरे, तैः
- अनुष्टुप् (श्लोकः) ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education ...

# भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
# अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥३२॥

- भरतः, तेषु, कैकेय्याः, तनयः, विनय-उज्ज्वलः, अन्यौ, लक्ष्मण-शत्रुघ्नौ, सुमित्रायाम्, कृत-उदयौ
- तेषु = रामम् अनु जातेषु त्रिषु
- विनयोज्ज्वलः = विनयगुणेन (प्रश्रयेण) भूषितः
- भरतः
- कैकेय्याः तनयः = पुत्रः

# भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
# अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥३२॥

- अन्यौ = इतरौ द्वौ कुमारौ
- लक्ष्मण-शत्रुघ्नौ
- सुमित्रायाम्
- कृतोदयौ = समुत्पन्नौ

# भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
# अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥३२॥

- अन्वयः – तेषु विनयोज्ज्वलः भरतः कैकेय्याः तनयः, अन्यौ लक्ष्मण-शत्रुघ्नौ सुमित्रायां कृतोदयौ ।
- तात्पर्य्यम् – रामस्यानन्तरं जातेषु त्रिषु कुमारेषु कैकेय्याः पुत्रः भरतनाम्ना ख्यातः, विनयेन भूषितः आसीत् । सुमित्रायां यमलौ जातौ, ययोः लक्ष्मणः, शत्रुघ्नश्चेति नामनी आस्ताम् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
# अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥३२॥

- भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
- साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥
- अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत् सुतौ ।
- वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ॥
- पुष्ये जातस्तु भरतः मीनलग्ने प्रसन्नधीः ।
- सार्पे जातौ तु सौमित्री कुलीरेऽभ्युदिते रवौ ॥ (बाल १८.१३-१५)

भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥३२॥

- विनयोज्ज्वलः – विनयेन उज्ज्वलः
- लक्ष्मणशत्रुघ्नौ – लक्ष्मणश्च शत्रुघ्नश्च
- कृतोदयौ – कृतः उदयः याभ्यां तौ

- अनुष्टुप् छन्दः

# एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
# लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- एते, ववृधिरे, वीराः, ब्रह्म-क्षेमाय, दीक्षिताः, लोक-आनन्द-मुकुन्दस्य, चत्वारः, इव, बाहवः
- ववृधिरे = प्रवृद्धाः
- के ववृधिरे? एते वीराः = इमे शूराः रामादयः चत्वारः
- कथम्भूताः ववृधिरे? दीक्षिताः = कृतसङ्कल्पाः

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
# लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- कस्मै दीक्षिताः? ब्रह्मक्षेमाय = विप्ररक्षणाय/वेदरक्षणाय/तपोरक्षणाय
- किमिव? चत्वारः बाहवः इव = चतुर्भुजोपमाः
- कस्य चत्वारः बाहवः इव? लोकानन्दमुकुन्दस्य = भुवनानां आनन्ददायकस्य विष्णोः

एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- अन्वयः – एते वीराः ब्रह्मक्षेमाय दीक्षिताः लोकानन्दमुकुन्दस्य चत्वारः बाहवः इव ववृधिरे ।
- तात्पर्य्यम् – रामादयः चत्वारः पराक्रमिणः कुमाराः बाल्यादेव वेदानां, विप्राणां, तपसश्च रक्षणाय कृतसङ्कल्पाः, भुवनानाम् आनन्ददायकस्य विष्णोः चत्वारः भुजाः इव प्रवृद्धाः ।

# एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
# लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
- सर्वे ज्ञानोपसम्पन्नाः सर्वे समुदिता गुणैः ॥ (बाल १८.२५)

एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- ववृधिरे – "वृधु वृद्धौ" – लिट्, प्रथम.३
- ब्रह्मक्षेमाय – ब्रह्मणः क्षेम, तस्मै । "वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" (अमरः)
- दीक्षिताः – दीक्षाऽस्य सञ्जाता – दीक्षा + इतच् (तद्धितः)। "यष्टा च यजमानश्च स सोमवति दीक्षितः" (अमरः)

एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥३३॥

- लोकानन्दमुकुन्दस्य – लोकानाम् आनन्दः, लोकानन्दश्चासौ मुकुन्दश्च, तस्य
- चत्वारः – चतुर्-शब्दः, नित्यं बहुवचनान्तः, पुं, प्रथमा.३
- बाहवः – उकारान्तः पुं, १.३ । "भुज-बाहू प्रवेष्टो दोः" (अमरः)
- उपमालङ्कारः
- अनुष्टुप्-छन्दः

अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्यबलावस्कन्द-कान्दिशीकवृन्दारकानीकपरिवार्यमाणरथः पङ्क्तिरथस्तपश्चर्याजातानामाश्चर्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसर्गभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं कुशिकसुतमद्राक्षीत् ।

- विश्वामित्रस्यागमनम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# अथ कदाचिदपरिमेय....

- अथ, कदाचित्, अपरिमेय-माया-भयानक-युद्ध-समुद्धत-दैत्य-बल-अवस्कन्द-कान्दिशीक-वृन्दारक-अनीक-परिवार्यमाण-रथः, पङ्क्ति-रथः, तपस्-चर्या-जातानाम्, आश्चर्याणाम्, आयतनम्, त्रिशङ्कु-याजिनम्, भगवन्तम्, पद्य-प्रबन्धम्, इव, दर्शित-सर्ग-भेदम्, प्राकृत-व्याकरणम्, इव, प्रकटित-वर्ण-व्यत्यासम्, बुधम्, इव, सोम-सुतम्, कुशिक-सुतम्, अद्राक्षीत्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

# अथ कदाचित् पङ्क्तिरथः कुशिकसुतम् अद्राक्षीत् ।

- अथ = रामादिषु प्रवृद्धेषु यौवनं प्राप्तेषु
- कदाचित् = कस्मिंश्चिद् दिने
- पङ्क्तिरथः = दशरथः
- कुशिकसुतम् = विश्वामित्रम्
- अद्राक्षीत् = दृष्टवान्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# अथ कदाचित् पङ्क्तिरथः कुशिकसुतम् अद्राक्षीत् ।

- पङ्क्तिः = दश । पङ्क्तिरथः, पङ्क्तिग्रीवः । “पङ्क्तिश्छन्दोऽपि दशमम्” (अमरः)। गायत्री (६) – उष्णिक् (७) – अनुष्टुप् (८) – बृहती (९) – पङ्क्तिः (१०) – त्रिष्टुप् (११) – जगती (१२)
- कुशिकसुतम् – कुशिकस्य सुतः, तम्
- अद्राक्षीत् – “दृशिर् प्रेक्षणे” – लुङ्, प्रथम.१

# अपरिमेय-माया-भयानक-युद्ध-समुद्धत-दैत्य-बल-अवस्कन्द-कान्दिशीक-वृन्दारक-अनीक-परिवार्यमाण-रथः पङ्क्ति-रथः

- कीदृशः पङ्क्तिरथः?
- अपरिमेया = अपरिमिता, या माया = कपटविद्या
- मायया भयानकानि = भयङ्कराणि,
- युद्धेषु = समरेषु, समुद्धतानि = दृप्तानि
- दैत्यानाम् = असुराणाम्, बलानि = सैन्यानि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अपरिमेय-माया-भयानक-युद्ध-समुद्धत-दैत्य-बल-अवस्कन्द-कान्दिशीक-वृन्दारक-अनीक-परिवार्यमाण-रथः पङ्क्ति-रथः

- ताद्दशानां सैन्यानाम् अवस्कन्दः = आक्रमणम्, तस्मात्
- कान्दिशीकाः = भयेन पलायमानाः
- वृन्दारकाणाम् = देवानाम्, अनीकाः = सेनाः, तैः
- परिवार्यमाणः = रक्षणार्थम् उपसृत्य आवृतम्, रथः = स्यन्दनः यस्य ताद्दशः
- दैत्यैः सह मायायुद्धे पराजयं प्राप्य पलायमानैः देवैः दशरथः रक्षणार्थं प्रार्थितः इत्यर्थः

# अपरिमेय-माया-भयानक-युद्ध-समुद्धत-दैत्य-बल-अवस्कन्द-कान्दिशीक-वृन्दारक-अनीक-परिवार्यमाण-रथः पङ्क्ति-रथः

- अपरिमेय – परिमातुं शक्या परिमेया । न परिमेया ।
- दैत्यः – "असुरा दैत्य-दैतेय-दनुज-इन्द्रारि-दानवाः" (अमरः)
- कान्दिशीकः – "कान्दिशीको भयद्रुतः" (अमरः)
- वृन्दारकः – "वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्" (अमरः)
- अनीकः – "वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्" (अमरः)
- रथः – "शताङ्गः स्यन्दनो रथः" (अमरः)

# तपस्-चर्या-जातानाम् आश्चर्याणाम् आयतनम्, त्रिशङ्कु-याजिनम्,

- कीदृशं कुशिकसुतम् अद्राक्षीत्?
- तपश्चर्याजातानाम् = तपोबलेन समुत्पन्नानाम्
- आश्चर्याणाम् = अद्भुतानाम्
- आयतनम् = आस्पदम्
- त्रिशङ्कुयाजिनम् = सदेहस्वर्गगमनम् इच्छतः त्रिशङ्कोः याजकम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# भगवन्तम्, पद्य-प्रबन्धम् इव, दर्शित-सर्ग-भेदम्,

- भगवन्तम् = पूज्यम्
- पद्यप्रबन्धम् इव = छन्दोबद्धं काव्यम् इव
- दर्शितसर्गभेदम् = पद्यप्रबन्धपक्षे सर्गरूपैः अध्यायैः अन्वितम्, विश्वामित्रपक्षे नूतनसृष्टेः प्रदर्शकम् । “अन्यमिद्रं करिष्यामि”!

# प्राकृत-व्याकरणम् इव प्रकटित-वर्ण-व्यत्यासम्, बुधम् इव सोम-सुतम्,

- प्राकृतव्याकरणम् इव = प्राकृतभाषाणां व्याकरणम् इव
- प्रकटितवर्णव्यत्यासम् = व्याकरणपक्षे अक्षरव्यत्ययसाधकम्, विश्वामित्रपक्षे क्षत्रियवर्णात् ब्राह्मणवर्णं प्राप्तवन्तम्
- बुधम् इव = सौम्यग्रहम् इव
- सोमसुतम् = बुधपक्षे सोमस्य चन्द्रस्य पुत्रः, विश्वामित्रपक्षे सोमयाजी

## तपश्चर्याजातानामाश्चर्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसर्गभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं

- त्रिशङ्कुयाजिनम् – त्रिशङ्कुं याजयति इति, तम् । नकारान्तः, पुं, २.१
- दर्शितसर्गभेदम् – सर्गस्य भेदः, दर्शितः सर्गभेदः येन सः
- प्रकटितवर्णव्यत्यासः – वर्णस्य व्यत्यासः, प्रकटितः वर्णव्यत्यासः येन सः
- सोमसुतम् – सोमस्य सुतः – अकारान्तः, पुं, २.१ । सोमं सुनोति – तकारान्तः, पुं, २.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# अथ कदाचित्...

- तात्पर्य्यम् – युद्धे दैत्येभ्यः पलायमानानां देवानामपि शरणप्रदायी दशरथः कदाचित् पूज्यं ब्रह्मर्षिं विश्वामित्रं दृष्टवान्, यः विश्वामित्रः स्वस्य तपोबलेन बहूनि अद्भुतानि घटयामास; सदेहस्वर्गगमनं कामयमानं त्रिशङ्कुं याजितवान्; अन्यामेव सृष्टिं निर्मातुं प्रवृत्तः; जन्मना क्षत्त्रियः सन्नपि उग्रेण तपसा ब्राह्मण्यम् अवाप; सोमयाजी च बभूव ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# सङ्क्षेपः

- तमेनमन्वजायन्त – रामानन्तरं त्रयः कुमाराः तदनुरूपगुणवीर्याः जाताः
- भरतस्तेषु – कैकेयीसुतः भरतः, सुमित्रासुतौ लक्ष्मणशत्रुघ्नौ च जातौ
- एते ववृधिरे वीरा – चत्वारः कुमाराः लोकहितङ्कराः प्रवृद्धाः
- अथ कदाचित् – दशरथस्य आस्थानं प्रत्यागतो विश्वामित्रः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in